॥ स्वसंवेद्योपनिषत् ॥

ॐ सर्वेषां प्राणिबुद्बुदानां निरञ्जनाव्यक्तामृतनिधौ विलयविलासः स्थितिर्विजृम्भते । तेषामेव पुनर्भवनं नो इहास्ति । स यथा मृत्पिण्डे घटानां तन्तौ पटानां तथैवेति भवति । वस्तुतो नोपादानमत एव नोपादेयमत एव न निमित्तमत एव न विद्या न पुराणं नो वेदा नेतिहासा इति न जगदिति न ब्रह्मा नो विष्णुः नाथ रुद्रो नेश्वरो न बिन्दुः नो कलेति अग्रे मध्येऽवसाने सर्वं यथावस्थितं यथावस्थितज्ञानं तेषां नो भवत्यागमपुराणेतिहासधर्मशास्त्रेषु धृताभिमानास्ते । यत्तानि तु मुग्धतरमुनिशब्दवाच्यैः जीवबुद्बुदैः रचितानीति भवन्ति । तत्र प्रामाण्यं तादृशानामेव । ते त्वज्ञानेनावृताः सयत्नेन गर्भास्तदप्येष श्लोको भवति । तदत्र श्लोको भवति ॥

इह तेनाप्यज्ञानेन नो किञ्चित् । अथ यथावस्थितज्ञानेन किञ्चित् नेति यदस्ति तदस्ति यन्नास्ति नास्ति तत् । कालकर्मात्मकमिदं स्वभावात्मकं चेति । न सुकृतं नो दुष्कृतम् । अत एव सुमेरुदातारो गोदातारो वा गोघ्नैः ब्राह्मणघ्नैः सुरापानैः पश्यतोहरैः परोक्षहरैर्वा गुरुपापनिष्ठैः सर्वपापनिष्ठैः समानास्त एते । तैश्च न गौः न ब्राह्मणः न सुरा न पश्यतोहरः न परोक्षहरः न गुरुपापानि न लघुपापानि मत एव तन्निष्ठाः मत एव न निर्वाणं नो निरय इति तदप्येष श्लोको भवति ॥

तत्त्वज्ञानं गुहायां निविष्टमज्ञानिकृतमार्गं सुष्ठु वदन्ति । ते तत्र साभिमाना वर्तन्ते । पुष्पितवचनेन मोहितास्ते भवन्ति । स यथातुरा भिषग्ग्रहणकाले बाला अपथ्याहितगुडादिना जनन्या वञ्चिता इति नानादेवता गुरुकर्मतीर्थनिष्ठाश्च ते भवन्ति । केचिद्वयं वैदिका इति वदन्ति । नान्येऽस्मभ्यम् । केचिद्वयं सर्वशास्त्रज्ञा इति । केचिद्वयं देवानुग्रहवन्तः । केचिद्वयं स्वप्ने उपास्यदेवताभाषिणः । केचिद्वयं देवा इति । केचिद्वयं श्रीमद्रमारमणनलिनभृङ्गा इति । केचित्तु नृत्यन्तु । केचित्तु मूर्खा वयं परमभक्ता इति वदन्तो रुदन्ति पतन्ति च । ये केचनैते ते सर्वेऽप्यज्ञानिनः । ये तु ज्ञानिनो भवन्ति ये तत्त्वज्ञानिनश्च तैस्तेषां को विशेषः । मत एव केषाञ्चित्कैश्चिद्भेदः । मत एव यत्र विरिञ्चिविष्णुरुद्रा ईश्वरश्च गच्छन्ति तत्रैव श्वानो गर्दभाः मार्जाराः कृमयश्च मत एव न श्वानगर्दभौ न मार्जारः न कृमिः नौत्तमाः न मध्यमाः न जघन्याः । तदप्येष श्लोको भवति ॥

न तच्छब्दः न किंशब्दः न सर्वे शब्दाः न माता नो पिता न बन्धुः न भार्या न पुत्रो न मित्रं नो सर्वे तथापि साधकैरात्मस्वरूपं वेदितुमिच्छद्भिर्जीवन्मुमुक्षुभिः सन्तः सेव्याः । भार्या पुत्रो गृहं धनं सर्वं तेभ्यो देयम् । कर्माद्वैतं न कार्यं भावाद्वैतं तु कार्यम् । निश्चयेन सर्वाद्वैतं कर्तव्यम् । गुरौ द्वैतमवश्यं कार्यम् । यतो न तस्मादन्यत् । येन सर्वमिदं प्रकाशितम् । कोऽन्यः तस्मात्परः । स जीवन्मुक्तो भवति स जीवन्मुक्तो भवति । य एवं वेद । य एवं वेद ॥

इति स्वसंवेद्योपनिषत् सम्पूर्णा ।